वाणीं भजत




# मासिकी पत्रिका


संस्कृतभाषाप्रचारिणी सभा, चित्तूरु. (आ० प्र०) भारतम्

| संपुटः ७ | 15th SEPTEMBER 1969 | क्रमांकः ९ |
|---|---|---|





सौम्य - भाद्रपदांकः] शकवर्षः १८९१ [मूल्यम् ४० पैसाः

# विषयसूचिका








# अखण्डभारतम्

—:O:—

महोच्चशैलश्रृंगके रसालसालशाखिका-
विटंकिकासुखस्थितस्य पुंपिकस्य कूजनैः ।
वसन्तकालसूचकैस्समैस्तवैः प्रगीपतां
मनस्विनां यशस्विनामखण्डभारतं सदा ॥

प्रचण्डभण्डपालनातिकुण्ठितैकभत्यकं
पिचण्डपूरणैकहृत्वजाविचारचालितम् ।
महात्मभिस्त्रथापि चैकसूत्रमन्त्रगुम्फितं
समस्तमेव भारतं समस्तमेव वर्धताम् ॥

त्रिभिः परीवृतं भृशं समुद्रकैस्समहितैः
हिमालयेन सालवत्सदोन्नतेन रक्षितम् ।
सुशिक्षिताधुनातनप्रवीरवारपूरितं
चकास्तु नित्यभीकरं द्विषामखण्डभारतम् ॥

प्रदेशसीमकल्पना विलुप्यतां, नदीनद –
प्रवाहरोधचोदना प्रलुप्यतां पृथग्विधा ।
अखण्डमेव भारतं प्रजासु भातु सन्ततं
विभेदभावभावना प्रमृज्यतां सदा हृदि ॥

---

# सम्पादकीयम्

*

## मन्त्रित्वे किं सम्मतिमात्रं योग्यता ?

प्रजापालनतंत्रस्य अवताराः शतशस्सहस्रशः प्रजाभिमुखं प्रत्यक्षीभवन्ति। असमर्थानां अयोग्यानां क्रूराणां वंचकानां निर्लज्जानां बहूनां हस्ते परिपालनयंत्रं प्रवर्तते। विद्यावय आरोग्यादियोग्यताः सकलेष्वपि किंकरप्रभृति करग्राह्यन्तेषु सेवापदेषु निर्णीताः दृढं अनुस्रियन्ते। उदाहरणत्वेन एकः उपाध्यायः स्वीक्रियताम्। तेन आंकाक्षितं पदं कलाशालायां महोन्नतपाठशालायामथवा उन्नतपाठशालायां उत प्राथमिकपाठशालायां वा इति विविच्यते प्रथमं। ततः वयः पंचपंचाशन्न्यूनं भवति वेति, ततः आरोग्यं स्वकर्मनिर्वहणानुगुणं वर्तते वा इति, विद्याभ्यास काले इतरत्र उद्योगनिर्वाहकाले वा अस्य प्रवर्तनं साधु वा इति, अस्य रूपं स्फुरत विद्यार्थिजनाकर्षकं वर्तते वा इति एवमादीन् बहूनंशान् सम्यग्विचार्य तृप्तसंभवे तत्र पदे नियोजयन्ति प्रथमं, एक द्विवत्सरं प्रत्यक्षानुभवेन तत्पदे तं स्थिरयन्ति उद्वापयन्ति वा। एवमेव एकः वास्तुकः (इंजनीर) आवश्यकः यदि भवेत्तर्हि वास्तुशास्त्रे तस्य योग्यतां पूर्वानुभवं वयः गंभीरतां उत्कोचाग्रहणशीलं चेत्यदि सर्वं परिशीलयैव तत्र नियोजयन्ति। उत्कोचग्रहणसन्देहे च तं दूरीकुर्वन्ति। एवमेव किं करस्यापि मितापि विद्या वर्ततेवेति, रूपवय आरोग्यशीलविनयादिसंभवं चालोच्य तत्तदुचितयोग्यतापत्रसमालोचनपूर्वकमेव स्थानं प्रददति।

मन्त्रिणां राज्यपालानां राष्ट्रपतेः उन्नतपदवीपूरकाणां कृते विद्यावयश्शीलादिरूपं किं चिदपि प्रवर्तकं नावश्यकमिति मर्हती दुर्गतिः। अस्ति नियामकं

भारतीयत्वं बहुलप्रजासम्मतत्वं इत्यादिकं तथापि परिपालनक्षेत्रे तदनुपयुक्तं सत् परिपालनं विफलयति विकटयति विभ्रंशयति च । बहून्युदाहरणानि वर्तन्ते मन्त्रिणां असमर्थतया स्वकार्यदर्शिभिः पराभूतानां प्रजासु स्ववाक्यपालनाक्षमाणां उभयभ्रष्टानाम् । इदमेकं शोकस्थानं विद्यायोग्यतारहितस्य मंत्रित्वावेशनावश्यकतायां प्रसक्तायां तं विद्यामंत्रिपीठः सुसमाह्वयति। इदं महच्चित्रं यदसमर्थस्य मन्त्रित्वावश्यकत्वे किंचन अनावश्यकमपि स्थानं सृज्यते । इदं अस्मद्दौर्भाग्यं यत् पालनयन्त्रे आवश्यकव्यक्त्यनुगुणं पदव्यः सृज्यन्ते नावश्यकपदव्यनुगुणं व्यक्तयः चीयन्ते। शीर्षानुगुणं न शीर्षण्यं क्रीयते, अपितु क्रीतस्य शीर्षण्यस्य अनुगुणं शीर्षमेव शात्यते। अनया रीत्या विविधपक्षीयसंतृप्तिमभिलषद्भिः प्रधान (मुख्य) मन्त्रिभिः त्रिंश यावत् मन्त्रिपदव्यः सृज्यन्ते इति कियद्वैपरीत्यम् ! एतेन ज्ञायते मन्त्रिणां पोषणार्थमेव प्रजाः, न प्रजापोषणार्थं मन्त्रिण इति । अमात्यानां आरोग्याभावे जराविक्लवदेहेन्द्रियत्वेपि नाधिकारविरामः । अद्ययावत् प्राणविराममात्रं पदवीविरमणाय अवधित्वेन आद्रियते। अपितु केषांचिन्मतं चैतद्वर्तते ग्रामोद्योगिनामिव अमात्यानामपि वंशपारंपर्यं कुतो वा नांगीक्रियत इति। केचित् स्वपितृकृतां पितामहकृतां वा सेवां पुरस्कृत्य स्वदोषान् पृष्ठतः कृत्य पदव्यां स्वाधिकारं निर्धारयन्ति । पदवीसमारूढानां अक्रमणां अनौचित्यानां आश्रितपक्षपातानां अर्थार्जनोपायानां चावधिरेव न दृश्यते। परोपदेशवेलायां सर्वे व्यासपराशराः । परन्तु स्वकीयाचरणे प्राप्ते नैकोपि सुमुखः क्वचित्। उपन्यासवेदिकासु अविच्छेदं धर्मानुपदिशेयुः, किन्तु नैकमपि लेशतोपि नाचरेयुः । एवं स्थिते यथा मन्त्री तथा प्रजा अभवन्। नियोगिनां स्वोच्चनियोगितो भयं नास्ति, उच्चनियोगिनां च शाखाधिपतितः, शाखाधिपस्य च मन्त्रितः। आमूलचूडं पालनयंत्रांगे न्यूनाधिकं तत्तद्योग्यतानुसारं उत्कोचास्वादमत्तत्वात् परस्परनिरोधप्रयत्ने त्वं शुंठः त्वं शुंठः इति एकरूपः प्रसंगो भवेदिति भीतिः द्योतते । अपि च दोषिणां दण्डने को वा लाभः ? अदण्डन एव ते स्वार्जितं अस्मन्यपि विभाजयन्ति । अन्यथा देवानामसुराणां च

मुखे मृदेव पतिष्यति इति उच्चधिकारिणः भावयन्ति। प्राणालिकासु कोटिशः धनं पृथक् क्रियते तत्तत्कार्यनिर्वाहाय। परन्तु नियतकाले धनं अवसितं भवेत् तदनुगुणानि प्रमाणकानि क्रमशः संचितानि च भवेयुः। न कार्यं निष्पद्येत, निष्पन्नवत् अवभासेपि, निर्णयभिन्नं आयानुगुणं निष्पादितं तत् अचिरादेव शिथिलं भवेत्। पुनः तत्पुनरुद्धरणप्रयन्तः तत्र निर्मायतुः निरायोगिनां च पुनरायः इत्येवंरीत्या भारतजातेः धनं दिने दिने क्षीयते।

प्रजानां मन्त्रिषु सन्देहः अतीव प्रबलोद्य विद्यते। अतः बहुत्र शासनसभासु मन्त्रित्वकाले तस्य व्यक्तेः सम्पादनं किमदिति विचर्यते। तदनृगुणं मन्त्रिभिः पदवीप्रवेशवेलायां स्वेषां जंगमस्थावरार्थसम्पत्तिः समर्पणीयेति पृच्छयते। परन्तु नैकोपि स्वार्थसम्पत्ति प्रकाशयितुं पुरस्सरति। अथापि मन्त्रित्ववेलायां स्वेन आर्जितं सर्वमपि भार्याया बालकानां भगिनीनां भागिनेयानां मित्राणां वा नाम्ना संरक्ष्यते। गुप्तयनं तैलबाहनेषु तन्मार्गेषु चलचित्रशालासु कर्मागारेषु अन्ततः देशान्तरधनागारेष्वपि गोपायन्ति। ते न प्रजाक्षोभं पश्यन्ति श्रृण्वन्ति वा। वस्तूनामर्धन्यूनीकरणाय किंचिदपि न चेष्टन्ते, अपितु स्वभावतः तादृहसे च कुत्रिमोपायैः अर्घमुच्चयन्ति। ते केवलं कर्षकाणां वणिजां च चिरसुखजीवनमाकांक्षन्ते यतस्ते अपि तज्जातीयाः। कोटिशो विद्यमानानां प्रजानां विनाशेपि न तेषां पिपीलिकादंशवदपि बाधा भवति।

किमेते मन्त्रिणः? एते पालकाः? एते प्रजाप्रतिनिधयः? एते देशभक्ताः? एते प्रजासेवकाः? आलोचयन्तु भवन्त एव। सम्मतिसंपादने द्वारं द्वारमटन्तः तत्प्राप्त्यनन्तरं दर्शनमेव न ददति सामान्यजनाय। उच्चपदसम्पादनार्थं उच्छिष्टपत्रलेहनाय तदर्थिन इव कलहायन्ते परस्परं सावेशं। परस्परं निन्दन्ति सत्यैः कल्पितैर्वा दोषैः। अवसिते च कार्ये परस्परं करं चालयन्ति अभिनन्दन्ति च।

अंतः मन्त्रित्वे योग्यता सामान्यसम्पतेरन्या आदेश्या। उपधाशुद्धिः सर्वतोपि मुख्या। तदभावे प्रजारक्षणभारसमर्पणं मेषाणां रक्षणे वृकनियोजनमनुमापयति।

सचिवास्सुचितास्सन्तु सुगुणाः जनरक्षकाः।
सुशीलाः देशभक्ताश्च त्यगिनो दृढनिश्चयाः॥

——:o:——

॥ श्रीः ॥

# ॥ सदर्थ समुच्चयः ॥

( पूर्वानुबन्धः )

सहजकरुणया चेतनाङ्गीकर्तुमवकाशविशेषमवेक्षमाणो भगवान् अस्मदीयेषु दुष्कृतेष्वपि सुकृतनामधेयमारोपयितुं जातुचिदवकाशमुपलभमानः कृपां प्रसर्पयति। भूयसीषु जन्मपरम्परासु याद्दच्छिकम् प्रासङ्गिकम् अनुषङ्गिकम् इति व्यपदेशयोग्यान् सुकृतविशेषान् स्वयमेवास्मासु कल्पयित्वा दयते - इति वस्तुस्थितिः। एतावता तस्याः कृपायास्सहेतुकत्वाभिधानं नैव साम्प्रतम्॥ ... ❁

१४. प्रबलदण्डनार्हपातकविशेषान् खलु वयमनारतं सृजामः। यदाहुः श्रीवत्साङ्कमिश्राः – ❁ यद् ब्रह्मकल्पनियुतानुभवेऽप्यनाश्यं तत्किल्बिषं सृजति जन्तुरिह क्षणार्धे ❁ इति। ❁ न निन्दितं कर्म तदस्ति लोके सहस्रशो यन्न मया व्यधायि ❁ अमर्यादः क्षुद्रश्चलमतिरसूयाप्रसवभूः कृतघ्नो दुर्मानी स्मरपरवशो वञ्चनपरः। नृशंसः पापिष्ठः ❁ इत्येवमेवमनुसन्धातुमुत्कटामार्हन्तीमधिवहतामस्माकं कृत्येषु धीपूर्वकोऽपि सुकृतलवलेशः कश्चिदस्तीति स्यान्नाम। अनघां भगवत्कृपां प्रति क्षोदिष्ठस्यास्य कर्मणः फल्गुनो हेतुत्वेनानुसन्धानं न विवेकिकृत्यम्॥ अत्र च वादान्तरमुत्तिष्ठेत; – अत्युत्तमाया भगवत्कृपाया अस्मासु सदृशहेतुर्नास्तीति कथ्यतां कामम्; तावता तस्या अहेतुकत्वकथनं कथमिव युज्यताम्? इति। हन्त! लघीयानेष वादः। याचकः पण्डितो राज्ञे लिकुचफलमर्पयन् महत्तरं राज्यं प्रतिलेभे यदि, राज्यदानं तत् सहेतुकमिति को वा मतिमान् मन्येत? वयं मन्यामह एवेति चेत्, कामं मन्यध्वम्। कः प्रतिरोद्धा।

१५. सहस्रगीत्याम् प्रथमशतकदशमदशके श्रीशठकोपमुनीन्द्रो भगवतो निर्हेतुककरुणाविशेषमनुभूय प्रहृष्यति। दशकस्यास्य निर्हेतुककरुणाविशेषप्रतिपादनपरत्वम् ۞ पेरियवाच्चान्पिळ्ळैगुरुवरा अन्वगृह्णन्निति प्रेक्षितवन्तो देशिकाः ۞ अव्याजोदारभावात् ۞ इत्येव स्वयं सारसंग्राहकसूक्तिविन्यासमातन्वत। अत्र च विवरणं समयान्तरे भविष्यतीति संक्षिप्यत इह। परमपदसोपाने च देशिकाः "अज्ञात - यादृच्छिक - आनुषङ्गिक - प्रासङ्गिकसामान्यबुद्धिमूलसुकृतविशेषान् व्याजीकृत्य विशेषकटाक्षमाधाय" इत्यनुजगृहुः। अत्र सारमिदमभिदध्महे। भगवतो वशीकरणार्थं शास्त्रेषु कर्मज्ञानभक्त्यादिकं चोदितमस्तीति प्रथितम्। चेतनानामभिरक्षणे स्वाभाविकरुचिशाली परमपुरुषः ۞ सर्वज्ञोऽपि हि विश्वेशः सदा कारुणिकोऽपि सन्। संसारतन्त्रवाहित्वात् रक्ष्यापेक्षां प्रतीक्षते ۞ इत्युक्तरीत्या अस्मत्तः किञ्चित्कामयत इति प्रोक्तमेकतः। भगवतः स्वकीया सूक्तिस्तु ۞ नासौ पुरुषकारेण न चाप्यन्येन हेतुना। केवलं स्वेच्छयैवाहं प्रेक्षे कञ्चित्कदाचन॥ ۞ इति समिन्धे। एवमभिदधानस्य भगवतः कृपायां सहेतुकतां व्याहर्तुं हन्त के वयम्! अस्मत्सकाशात् यत्किमपि प्रतिलभ्यैव भगवानस्मासु करुणां प्रसारयतीति कथनं मननं वा भृशं हेयम्। 'भगवान् निर्हेतुकमेव दयत' इति कथनम् न केवलं तदुत्कर्षमात्रप्रपञ्चनम्; वस्तुस्थितिरपीत्यलम्॥ ... ... ۞

१३. चेतनलाभः परमचेतनस्यैव हर्षप्रकर्षायेत्युपपादयन्ति पूर्वाचार्याः। तेषां गोष्ठ्याम् 'चेतनेन ईश्वरो लभ्यते वा? ईश्वरेण चेतनो लभ्यते वा?' इति विचारः प्रसृतः। ईश्वरलाभेन चेतनः प्रहृष्यति वा? चेतनलाभत ईश्वरः प्रहृष्यति वा? इति तावद्विचारसारांशः। विचारस्यास्य समीचीनं पर्यवसानं यदि हृदि धार्येत, तर्हि साम्प्रदायिकेषु सुबहुषु तत्वार्थेषु वैशद्यं हृदयंगतं स्यात्। प्रायस्सर्वेष्वपि विषयेषु स्थूलदृष्टिः सूक्ष्मदृष्टिरिति दृष्टिद्वयमस्त्येव खलु। प्रकृते विचारे तु स्थूलदृष्ट्या ईश्वरलाभेन चेतनः प्रहृष्यतीति प्रतीयेत। ईश्वरं प्राप्तुं चेतनः

प्रयतते; ❁ श्रीमन्नारायणचरणौ शरणं प्रपद्ये ❁ अकिञ्चनोऽनन्यगतिः शरण्यः, त्वत्पादमूलं शरणं प्रपद्ये ❁ इत्यादि कथयन् परमपुरुषं प्रपद्यते च ; ❁ ब्रह्मविदाप्नोति परम् ❁ इति तैत्तिरीयोपनिषदि श्रवणात् अन्ततस्तमेव सर्वेश्वरं प्राप्नोति च इति तावत्प्रतियन्ति प्रायः प्राज्ञाः। सोऽयं प्रत्ययस्सत्यं स्थूलदृष्टित एव। आम्नातमेव सत्यमुपनिषदि ❁ ब्रह्मविदाप्नोति परम् ❁ इति। वाक्येनानेन चेतनस्य प्राप्तृत्वम् ईश्वरस्य प्राप्यत्वं च प्रतीयत एव। अर्थपञ्चकप्रतिपादकप्रमाणवचनेषु ❁ प्राप्यस्य ब्रह्मणो रूपं प्राप्तुश्च प्रत्यगात्मनः ❁ इति कथनात् प्राप्यं परं ब्रह्मैव, प्राप्ता चेतन एवेति स्पष्टमुपलभ्यते च। चेतनस्य प्राप्तृत्वम् ईश्वरस्य प्राप्यत्वं चाधिकृत्य किमधिकमुपपादनीयमस्ति। सर्वशास्त्रसंप्रतिपन्नो ह्ययमर्थः। ❁ रसो वै सः। रसँ ह्येवायं लब्ध्वाऽऽनन्दी भवति ❁ इत्यादीनि च उपनिषद्वाक्यानि चेतनः परमपुरुषमुपलभ्य प्रहृष्यतीति सुस्पष्टमेव प्रतिपादयन्ति। एतद्विपरीतार्थप्रतिपत्तिः न प्रामाणिकी भवितुमर्हति। ईश्वरेण चेतनो लभ्यत इति, चेतनलाभेन ईश्वरः प्रहृष्यतीति च कथनमनुपपन्नम् अनन्वितश्चेति मन्तव्यं भवति। तथाच ईश्वरलाभाय प्रयत्नश्चेतनस्यैव, फलेग्रहिणा तेन प्रयत्नेन प्रहर्षभागिता च चेतनस्यैव इति तावत्सिद्धान्तयन्ति परे।

१७. असमञ्जसोऽयमर्थ इति हन्त ! को वा वेदान्तनिष्णातः प्रतिपादयितुं प्रभवति ? यतो हि सुष्ठु जाग्रति ❁ ब्रह्मविदाप्नोति परम् ❁ रसँ ह्येवायं लब्ध्वाऽऽनन्दी भवति ❁ इत्यादीन्यौपनिषदवचनानि। तथाऽपि, 'प्राप्ताऽपि ईश्वर एव, प्राप्तितः प्रहर्षभागपि ईश्वर एवे'ति सारविदां सिद्धान्तः। ब्रह्मविदः प्राज्ञाः १. शास्त्रविदः २. सारविद इति द्वेधा विभज्यन्ते। रहस्यार्थविदः सारज्ञा इति, रहस्येतरविदः शास्त्रज्ञा इति चाभिलप्यन्ते। 'चेतनः प्राप्ता, ईश्वरः प्राप्यः' इत्ययमर्थः शास्त्रज्ञानां सम्मतः ; 'ईश्वरः प्राप्ता, चेतनः प्राप्यः' इत्यसावर्थः सारज्ञसम्मतः। इदमुपपाद्यामः। चेतनोऽयं यदा मुक्तो भवति तदा

◎ अहमन्न महमन्नमहमन्नम् ◎ इत्येतत्साम गायन्नास्त इति श्रूयते। स्वप्रीतिपात्रचेतनस्य अलाभेन क्षुधितस्य स्थितस्य परमपुरुषस्य इदानीं क्षुत्प्रशमनं वोभवीतीति द्योतयन् हि मुक्तात्मा ◎ अहमन्नमित्याम्रेडयति। क्षुधितस्य सतो भगवतः अहम् अन्नमिति तदर्थः। एतेन ईश्वरस्य भोक्तृत्वम् चैतनस्य भोग्यत्वं च कण्ठोक्तं भवति। ◎ अहमन्नमिति गायन्मुक्तात्मा अनुपदमेव ◎ अहमन्नादोऽहमन्नादः ◎ इत्यपि खलु गायतीति प्रत्यवस्थीयेत। प्रथमतः परमपुरुषस्य क्षुधां प्रशमय्य पश्चात् स्वात्मनः क्षुधां प्रशमयतीति सत्यमभ्युपेयते। ◎ अहमन्नमन्नमदन्तमद्मि ◎ इत्यनुपदवाक्येनापि अयमर्थो विव्रियते। प्रथमतोऽहं परब्रह्मणः अन्नं भूत्वा अथ मामदन्तं तम् — मदनुभोगनिष्णातं भगवन्तम्, अहमद्मि — मदीयक्षुत्प्रशमनार्थमहमनुभोक्तुमुपक्रमे इति तदर्थः। अत्रेदं हृदयम्; स्वात्मना चिरादन्विष्यमाणं चेतनं समुपस्थितं सभीक्ष्य हर्षप्रकर्षविवशम् भगवन्तमनुभुञ्जानश्चेतनोऽपि परस्तात् स्वयं प्रहृष्यतीति।

१८. नायमात्मा अचेतनः; ज्ञानानन्दमयो ह्ययम्। आनन्दस्तावदर्जनीयोऽस्य। अचिदपेक्षयाऽस्य व्यावृतिरवश्यं भाविनी। स्वानुभवेन प्रहृष्यन्तं परमात्मानमवेक्षमाणोऽयम् 'हन्त! क्षोदीयसो ममानुभवेन स्वतोऽवाप्तसमस्तकामस्य परमपुरुषस्य एवंनाम वाचाममूमिरानन्दो ह्युपजायते!' इत्यनुध्यायन् स्वयमपि प्रहृष्यति चेतनः। ◎ अहमन्नादः ◎ अहमन्नमन्नमदन्तमद्मि ◎ इत्याद्युपद्वचसामयमेवार्थः।

१९. ◎ वेदवेद्ये परे पुंसि जाते दशरथात्मजे। वेदः प्राचेतसादासीत्साक्षाद्रामायणात्मना॥ ◎ इति वेदप्रादुर्भावविशेषत्वेन प्रशस्यमाने श्रीरामायणे वेदार्थोऽयं बहुषु स्थलेषु विव्रियते; स्थलमेकमिह पश्यत। ◎ अभिषिच्य च लङ्कायां राक्षसेन्द्रं विभीषणम्। कृतकृत्यस्तदा रामो विज्वरः प्रमुमोद ह॥ ◎ इतीदं श्लोकरत्नं तत्र सुप्रथितम्। प्राप्तमकुटाभिषेकेण विभीषणेन हि प्रमुदितेन भवितव्यम्; तत्रैव हि कृतकृत्येन च भवितव्यम्। (सशेषम्)

# संस्कृतदिनमहोत्सवः

## संस्कृत भाषाप्रचारणी सभा.

---

27—8—69 श्रावणपूर्णिमादिने संस्कृतदिनोत्सवः आसेतुहिमाचलं संस्कृतदिनोत्सवः महता आनन्देन सम्मानितः। भारतसर्वकारस्यैव एतदुत्सव निर्वर्तनं जातीयरीत्या बुद्ध्यारूडमिति महती शुभवार्ता।

एतत्प्रणाल्या संस्कृतभाषाप्रजारिण्या सभया च चित्तूरनगरे स्वभवने संस्कृतदिनोत्सवः आयोजितः। श्री सी. जी. सुब्रह्मण्यम्, M A, B Ed., महोदयः बहुलार्थसाधकपाठशालायाः प्राध्यापकः समावेशस्य आध्यक्ष्यमवहत्। बहवः संस्कुतप्रेमिणः पुरप्रमुखाः विद्यार्थिनश्च सभामलमकुर्वन्। कुमार्याः गायत्रीदेव्याः दैवप्रार्थनया श्री. वरदराजपंडितस्य स्वागतवचनैः समावेशः समारब्धः। अनन्तरं अध्यक्षपीठात् भाषमाणः श्री सुब्रह्मण्यमहोदयः स्वीयसंस्कृतपठनचरित्रं तद्वरोधांश्च प्रस्तुत्य अल्पपरिचयेनापि स्वात्मना अनुभूयमानं आनन्दं संस्कारविशेषं च प्राशंसत्। स प्राबोधयत् विद्यार्थिनः सर्वानपि स्वेच्छया संस्कृताभ्यासाय। अनन्तरं श्री मुनिरेड्डिपंडितः भाषमाणः संस्कृतदिनोत्सवसम्माननेन संस्कृतस्य न किंचिदपि प्रयोजन, अपितु पाठशालासु संस्कृतपठननस्य अनिवार्यता आदेश्या, अथवा चित्रलेखन व्यायामोपाध्यायवत् इव संस्कृताध्यापकस्यापि नियतनिवेशः तत्र संपादनीयः, येन संस्कृतपठने उत्सुकाः विद्यार्थिनः तदितरश्च स्वाभीष्टं साधयेयुः। इदानीं तु सर्वत्र विद्यार्थिसत्वेपि उपाध्यायाभावात् पिपठिषा तेषां मनस्येव जीर्यति इति अवोचत्। श्रीमतः वरदराजपंडितस्य प्रोत्साहेन वर्धमानायाः संस्कृतपाठशालायाः समुन्नतिं अस्तौषीत् सभाकार्यदर्शी श्री रामनाथार्यः। श्री तिरुवेङ्कटाचार्यस्य वंदनसमर्पणेन फलपुष्पप्रदानेन च स सभावेशः सुसंपूरितः।

---

# श्रीवत्स - बालमन्दिरम्, मुंबापुरी,

---

श्रावणी पूर्णिमा तिथौ २७—८—६९ दिनांके श्रीवत्स बालमन्दिरम्, सुरभारती, संस्कृत विद्यापीठम् तिलक महाराष्ट्र विद्यापीठम, आदिभि मुम्बइ - स्थित - विविधाभिः १२ संस्थाभिः आयोजिता इयम् संस्कृत-दिन-समारोह-सभा केन्द्र सर्वकारं लोकसभां, सर्वान् राज्यसर्वकारान च प्रार्थयते यत —

अस्माकं संविधाने अद्य वधि अविद्यमानम् राष्ट्रभाषापदम्, भारत संविधा-नस्य ३४३ तमे परिच्छदे सशोधनं कृत्वा, निर्माय तत्र संस्कृत-भाषायाः प्रति-ष्ठापना शीघ्रात शीघ्रम् करणीया। कुतः इति पृष्टे चेत उच्यते "राष्ट्रभाषापदम्" एव भारत भाषानीतौ उच्चतममानार्हस्थानम्। भारते उच्चतमा भाषा संस्कृतभाषा एव। अतः निःसदिग्धं निःसरति यत् उच्चतम स्थानम्—नाम राष्ट्रभाषापदं उच्चतम-भाषायै नाम संस्कृतभाषायै एव देयम् इति।

अस्याः सभायाः अध्यक्षाः आसन् श्री चंद्रकान्त गोडसे महाराष्ट्र सर्व-कारस्य धर्मदान - आयुक्ताः नाम चेरिटी कमिशनर प्रमुख-भाषणकः आयत् महाराष्ट्र विधान - सभा - सदस्याः श्री अनन्त झा नामजोशी महोदयाः

अस्याम् सभायाम् एव "संस्कृतदिन" — सुमुहुर्तेन।

अखिल — भारतीय — संस्कृत — पण्डित — परिषद् प्रतिष्ठापिता। अस्याः परिषदः प्रथमम् अधिवेशनम् १९७० जानेवरी मासे मुम्बई नगरे केन्द्र सर्वकारस्य शिक्षामंत्रिणः उद्घारकत्वेन भविष्यन्ति कार्यकारि मण्डलस्य अध्यक्षाः सन्ति प्रसिद्धाः प्रा. म. म. दत्तो वामन पोतदार महोदयाः महामन्त्री च आस्ति श्री ल म. चक्रदेव महोदयः।

अस्यां सभायां अन्यः प्रस्तावः पारितः यत् संस्कृत आयोगेन कृता सूचना "परराष्ट्रस्थित प्रत्येकस्मिन् दूतावासे (एम्बसी) एकः प्रसिद्धः संस्कृत पण्डितः नियोजनीयः" इति सपदि एव कार्यान्विता करणीया।

सं. दि. समारोह सभा संयोजकः ल. च. चक्रदेवः।

---

# A Nation Without The National Language!

An English poet has posed the question "breathes there the man with Soul so dead, who never to himself hath said This my own, my Native Land?" the implied answer being an emphatic 'No' In the same st ain, the question may be asked "breathes there the Nation with Soul so dead, which has no National Language?' How much we wish, the implied answer to theis quustion also could be a 'No'. But, alas, there does exist a Nation whichhas no National Language, or at least one which has not determined or named it; and that Nation with' Soul so dead' is no other than 'India that is Bhaarata'

The Constituent Assembly determined in 1947—49 some of the National Entities such as

1 The National Name— "Bhaarata" known from time immemorial.

2. The National Matto—"Satyamewa Jayate" form the Mundakyha Upanishad, written in the unknown past

3. The National Flag— "The Tri-Colour, with the Ashoka - Chakra thercon. 2200 years ancient.

4. The National Emblem—"Ashok's Lion-Capital on the Ashoka-Pillar, also 2200 years, ancient

5 The National Anthcm —"Jana-Gana-Mana......" composed in 1911 by our Nobel - Laureate-poet Dr. Tagore

6. The National Calendar—"Determined by Loka Sabhaa on 22-3-57.

7. The National Flower-"The Lotus"
8. The National Bird-"The Peacock"
9 The National Animal-"The Lion"

} Recently determined because these three occur everywherein our Culture and Literature

But our Constitution or Parliament has not so far determined the MOST important National Entity namely

10 The National Language.

Some people will surely come forward to refute and oppose this statement of ours and will assert that Hindi has already been determined as our National Language by the Constitution in 1950.

We hasten to point out that this submission of these people is totally ERRONEOUS The Constitution, in its Art 343, has appointed Hindi, NOT AS THE NATIONALLANGUAGE but only as the UNION OFFICIAL LANGUAGE. They will then say, 'Oh, both mean the same thing' This is an cxtremely thoughtless statement, because in reality, these are totally different things. English has been the Union Official Language for a full century before Swaraajya and for 22 years even after we got Swaraajya but no sensible person dare say that English is our National Language. Thus, it is the greatest LACUNA in our Constitution that, in its part XVII (which should have been named 'Language Policy' and not 'Officiai Language') the Place, Chair or Designation of National Language has not been even created or provided for.

This serious deficiency in our constitution must be removed by our Parliament creating such a 'position' and

by installing therein, that Bhaaratiiya Language which will be found to be most befitting it, after scientific and careful study. How have, the first nine National Entities been chosen? The Criterion in each case has been the **INTRINSIC MERIT** of each individual occupant of the National Chair, coupled with Tredition, Cultural Value, Love and Respect bestowed on it in our philosophy and Literature and its uniformly even distribution in the Nation, but in no case has the Criterion been the Number. Applying these very Criteria, which of the Bhaaratiiya Languages deserves to be made the National Language? Undoubtedly, Sanskrit and NO other. The question "How many persons speak Sanskrit as their Mother Tongue **TODAY IN INDIA**? "or even the one" How many persons in our country, at least know it or can understand it at the present Time?" does not even arise in the present context, just as the question "How many persons speak the Truth?" did not arise when 'Satyamewa Jayate' was chosen as our National Motto; or the question "How many Lions are there in our Country?" was never asked when the Lion was named as the National Animal, very receently.

Let us approach this problem from another angle. All thinking men have acknowledged Sanskrit as the greatest Indian Language and even Mahaatmajii regretted that he did not learn enough of it as a student. He always advised that each Indian must learn that Language. It is no wonder that under the alien British rule, this **BEST** Language deteriorated But it has been deteriorating **EVEN FASTER** after the attainment of Swaraajya How do you account for this phenomenon? That, this was so, because Sanskrit was not given its proper place in our set-up, was realised, among other thinking people, by our First President, Dr Rajendraprasaada. He therefore often made the statement in his speeches that Sanskrit should be given its **PROPER PLACE** God alone knows to whom this, the **FIRST**

MAN in our Nation, made this demand. Neither he nor any one else took the trouble of spelling out what that "PROPER PLACE" is Of course, Dr Ambedkar, Mr. Naziruddin Ahmad, Dr. Anay, Dr. Katju and some others made the demand that Sanskrit should be made the National Language in the Consembly and the Shankaraachaaryas of Dwarka and Puri, Sir C.V Raman and others outside it, but nothing was actually done by any one in that direction, and the deterioration of Sankrit is a continuous process till today! Really speaking, this is an excellent example of the figure of speech known as 'Transferred Epithet' because it is not Sanskrit that is deteriorating: its greatness is not reduced even by an iota. it is we the people of India and all the Regional Languages that are deteriorating because of the neglect of Sanskrit!

Now, if any person or thing or any entity is to get any importance and if any good and tangible work is to be expected out of the same, it must be given a designation, a place, a chair, a pedestal, from where it could work. Sanskrit has not been given any chair, status. or an honourable place and hence, it is no wonder that the general public and the students are neglecting to study it and Sanskrit is said to deteriorate, with lamentable results

However, a Silver lining is now appearing round the dark clouds that have been eclipsing Sanskrit during the past 22 years; because just recently, the Central Govt. has announce that the Wyaasapurnimaa or the full-moon day of Shraawana Should henceforth be celebrated each year, throughout the Nation, as the 'Sanskrit-Day'. The Union Govt., must be congratulated upon their resurrecting this practice now at Government Level All these years Sanskrit had no platform at Govt. Level, to discuss its problems and ventilate its grievances. This

'SANSKRIT-DAY' has given us the much needed platform. Shri Bhaktadarshan and Dr Karansing have like Mr. A. O. Hume established the "Congress" and the Sanskrit Language getting its "Swarajya" namely its deserved and PROPER PLACE in our Nation, is ensured, howsoever arduous that process may be.

Ary conference would be a fitting occasion to discuss and find out what that PROPER PLACE is which Dr. Rajendraprasad wished for Sanskrit We are sure, no one will deny the obvious fact that, ON MERITS. Sanskrit deserves to be given the HIGHEST PLACE OF HONOUR IN OUR NATION. Which is the 'Highest place' in the cadre of Languages in any Nation? The position known as National Language. Thus it follows that Sanskrit must be INSTALLED AS THE NATIONAL LANGUAGE OF BHAARAT, by amending the Constitution in its Article 343 by adding a clause to it purporting to say "**Sanskrit has been the National Language of India in the real sense of the term, from time immemorial and it shall continue to be so in future**" We request every Institution to pass resolutions making this demand, and send copies to Govt. of India, State Govts and to us, to enable us to follow up the matter.

As has been pointed out in the beginning, our Constitution has not provided the position of ''National Language'' and has not named any Language as the National Language. Hemce the demand we are making and are requesting all others to make, Is not treason. It is not any agitation against the constitution or the Govt. It boes not amount to treading into politics. It is a demand entirely on the cultural level for securing common justice to this great language of our nation. This is a measure long overde, in the

best interests of our couutry's unity, national integration and all such higher sentiments. It is not an agression on the legitimate claims of any other laugnage as no other can lay claim on this honour and position called national language. No one should therefore fight shy of making this clear-cut demand.

299 D, Charni Road,
Bombay 4

Telephone No : 356258
15th Aug 1969

**L M, Chakradeo,**
Bombay Univeisty Senate
Member

**S N. Sapre (Retd I A S)**
**ann Others**



# गिरिरेधताम्

---

अतिलोकधैर्यधुर्यस्सहिष्णुरुरुसंकटातंकान् ।
कर्तव्यमात्रनिष्ठः वी. वी, गिरिरेधतां भुवनु ॥

कार्मिकजनसंक्षेमे धार्मिकजनताविपन्निराकरणे ।
निर्धनमानवहितसंवर्धनदक्षी गिरिर्जयतात् ॥

राष्ट्रपतिपदनियुद्धे स्वतंत्रशक्त्या महारथस्तिष्ठन् ।
प्रतिबलममितबलमसौ विजित्य राराजते लोके ॥

भीष्मवदतीव वृद्धः द्रोणवदुपदेशकः सदा नीतेः ।
विजयवदवितथलक्ष्यः वी. वी. गिरिरेधतां भुवने ॥

स्थूलोपि सूक्ष्मबुद्धिर्वृद्धोपि च समधिकोत्साहः ।
कांग्रेसपक्षाधीनोप्यखिलप्रतिपक्षदक्षिणो हि गिरिः ॥

आयुरभिवर्धतां ते ह्यारोग्यं भाग्यममरपतिभोग्यम् ।
राज्यं समेधतां ते प्राज्यं भोज्यं गिरे! सर्वैः समं सततम् ॥

—:o:—

